# ॥ श्रीजगन्नाथसहस्रनामस्तोत्रं ॥

॥ ॐ श्रीजगन्नाथाय नमो नमः ॥

प्रार्थना

देवदानवगन्धर्वयक्षविद्याधरोरगैः ।
सेव्यमानं सदा चारुकोटिसूर्यसमप्रभम् ॥ १॥
ध्यायेन्नारायणं देवं चतुर्वर्गफलप्रदम् ।
जय कृष्ण जगन्नाथ जय सर्वाधिनायक ॥ २॥
जयाशेषजगद्वन्द्यपादाम्भोज नमोऽस्तु ते ॥ ३॥

युधिष्ठिर उवाच
यस्य प्रसादात्तु सर्वं यस्तु विष्णुपरायणः ।
यस्तु धाता विधाता च यश्च सत्यं परो भवेत् ॥ १॥
यस्य मायामयं जालं त्रैलोक्यं सचराचरम् ।
मर्त्यांश्च मृगतृष्णायां भ्रामयत्यपि केवलम् ॥ २॥
नमाम्यहं जगतप्रीत्या नामानि च जगत्पतिम् ।
बृहत्या कथितं यच्च तन्मे कथय साम्प्रतम् ॥ ३॥

भीष्म उवाच
युधिष्ठिर महाबाहो कथयामि शृणुष्व मे ।
जगन्नाथस्य नामानि पवित्राणि शुभानि च ॥ १॥
मायया यस्य संसारो व्यापृतः सचराचरः ।
यस्य प्रसादाद्ब्रह्माणं सृष्ट्वा पाति च सर्वदा ॥ २॥
ब्रह्मादिदशदिक्पालान् मायाविमोहितान् खलु ।
यस्य चेष्टावरोहश्च ब्रह्माण्डखण्डगोचरः ॥ ३॥
दया वा ममता यस्य सर्वभूतेषु सर्वगः ।
सत्यधर्मविभूषस्य जगन्नाथस्य सर्वतः ॥ ४॥
कथयामि सहस्राणि नामानि तव चानघ ॥ ५॥

अथ श्रीजगन्नाथस्य सहस्रनामस्तोत्रम् ।

अथ विनियोगः ।
अस्य मातृका मन्त्रस्य, वेदव्यासो ऋषिः, अनुष्टुप्छन्दः,
श्रीजगन्नाथो देवता, भगवतः श्रीजगन्नाथस्य प्रीत्यर्थे

सहस्रनाम पठने विनियोगः ।

ध्यानम्

नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं
सर्वालङ्कारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन ।
भद्राया वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्रवन्द्यं
वेदानां सारमीशं स्वजनपरिवृतं ब्रह्मदारु स्मरामि ॥

श्रीभगवानुवाच
चतुर्भुजो जगन्नाथः कण्ठशोभितकौस्तुभः ।
पद्मनाभो वेदगर्भश्चन्द्रसूर्यविलोचनः ॥ १॥
जगन्नाथो लोकनाथो नीलाद्रीशः परो हरिः ।
दीनबन्धुर्दयासिन्धुः कृपालुः जनरक्षकः ॥ २॥
कम्बुपाणिः चक्रपाणिः पद्मनाभो नरोत्तमः ।
जगतां पालको व्यापी सर्वव्यापी सुरेश्वरः ॥ ३॥
लोकराजो देवराजः शक्रो भूपश्च भूपतिः ।
नीलाद्रिपतिनाथश्च अनन्तः पुरुषोत्तमः ॥ ४॥
तार्क्ष्योर्ध्यायः कल्पतरुः विमलाप्रीतिवर्द्धनः । var? तार्क्ष्यध्वजः
बलभद्रो वासुदेवो माधवो मधुसूदनः ॥ ५॥

दैत्यारिः पुण्डरीकाक्षो वनमाली बलप्रियः ।
ब्रह्मा विष्णुः वृष्णिवंशो मुरारिः कृष्णकेशवः ॥ ६॥
श्रीरामः सच्चिदानन्दो गोविन्दः परमेश्वरः ।
विष्णुर्जिष्णुर्महाविष्णुः प्रभविष्णुर्महेश्वरः ॥ ७॥
लोककर्ता जगन्नाथो महाकर्ता महायशाः ।
महर्षिः कपिलाचार्यो लोकचारी सुरो हरिः ॥ ८॥
आत्मा च जीवपालश्च शूरः संसारपालकः ।
एकोनैको ममप्रियो ब्रह्मवादी महेश्वरः ॥ ९॥ var? सर्वप्रियो रमाप्रियो
द्विभुजश्च चतुर्बाहुः शतबाहुः सहस्रकः ।
पद्मपत्रविशालाक्षः पद्मगर्भः परो हरिः ॥ १०॥

पद्महस्तो देवपालो दैत्यारिर्दैत्यनाशनः ।
चतुर्मूर्तिश्चतुर्बाहुश्चतुराननसेवितः ॥ ११॥
पद्महस्तश्चक्रपाणिः शङ्खहस्तो गदाधरः ।
महावैकुण्ठवासी च लक्ष्मीप्रीतिकरः सदा ॥ १२॥
विश्वनाथः प्रीतिदश्च सर्वदेवप्रियंकरः ।

विश्वव्यापी दारुरूपश्चन्द्रसूर्यविलोचनः ॥ १३॥ var   प्रियव्यापि
गुप्तगङ्गोपलब्धिश्च तुलसीप्रीतिवर्द्धनः ।
जगदीशः श्रीनिवासः श्रीपतिः श्रीगदाग्रजः ॥ १४॥
सरस्वतीमूलाधारः श्रीवत्सः श्रीदयानिधिः ।
प्रजापतिः भृगुपतिर्भार्गवो नीलसुन्दरः ॥ १५॥

योगमायागुणारूपो जगद्योनीश्वरो हरिः ।
आदित्यः प्रलयोद्धारी आदौ संसारपालकः ॥ १६॥
कृपाविष्टः पद्मपाणिरमूर्तिर्जगदाश्रयः ।
पद्मनाभो निराकारः निर्लिप्तः पुरुषोत्तमः ॥ १७॥
कृपाकरः जगद्व्यापी श्रीकरः शङ्खशोभितः ।
समुद्रकोटिगम्भीरो देवताप्रीतिदः सदा ॥ १८॥
सुरपतिर्भूतपतिर्ब्रह्मचारी पुरन्दरः ।
आकाशवायुमूर्तिश्च ब्रह्ममूर्तिर्जलेस्थितः ॥ १९॥
ब्रह्मा विष्णुर्दृष्टिपालः परमोऽमृतदायकः ।
परमानन्दसंपूर्णः पुण्यदेवः परायणः ॥ २०॥ var   पुण्यदेहः

धनी च धनदाता च धनगर्भो महेश्वरः ।
पाशपाणिः सर्वजीवः सर्वसंसाररक्षकः ॥ २१॥
देवकर्ता ब्रह्मकर्ता वषिष्ठो ब्रह्मपालकः ।
जगत्पतिः सुराचार्यो जगद्व्यापी जितेन्द्रियः ॥ २२॥
महामूर्तिर्विश्वमूर्तिर्महाबुद्धिः पराक्रमः ।
सर्वबीजार्थचारी च द्रष्टा वेदपतिः सदा ॥ २३॥
सर्वजीवस्य जीवश्च गोपतिर्मरुतां पतिः ।
मनोबुद्धिरहंकारकामादिक्रोधनाशनः ॥ २४॥ var   क्रोधशातनः
कामदेवः कामपालः कामाङ्गः कामवल्लभः ।
शत्रुनाशी कृपासिन्धुः कृपालुः परमेश्वरः ॥ २५॥

देवत्राता देवमाता भ्राता बन्धुः पिता सखा ।
बालवृद्धस्तनूरूपो विश्वकर्मा बलोऽबलः ॥ २६॥ var   बलोद्बलः
अनेकमूर्तिः सततं सत्यवादी सतांगतिः ।
लोकब्रह्म बृहद्ब्रह्म स्थूलब्रह्म सुरेश्वरः ॥ २७॥
जगद्व्यापी सदाचारी सर्वभूतश्च भूपतिः । var?   सर्वभुईपश्च
दुर्गपालः क्षेत्रनाथो रतीशो रतिनायकः ॥ २८॥
बली विश्वबलाचारी बलदो बलि-वामनः ।
दरह्रासः शरच्चन्द्रः परमः परपालकः ॥ २९॥

अकारादिमकारान्तो मध्योकारः स्वरूपधृक् ।
स्तुतिस्थायी सोमपाश्च स्वाहाकारः स्वधाकरः ॥ ३० ॥

मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः ।
परशुरामो महावीर्यो रामो दशरथात्मजः ॥ ३१ ॥
देवकीनन्दनः श्रेष्ठो नृहरिः नरपालकः ।
वनमाली देहधारी पद्ममाली विभूषणः ॥ ३२ ॥
मल्लीकामालधारी च जातीयूथिप्रियः सदा ।
बृहत्पिता महापिता ब्राह्मणो ब्राह्मणप्रियः ॥ ३३ ॥
कल्पराजः खगपतिर्देवेशो देववल्लभः ।
परमात्मा बलो राज्ञां माङ्गल्यं सर्वमङ्गलः ॥ ३४ ॥ var राजा
सर्वबलो देहधारी राज्ञां च बलदायकः ।
नानापक्षिपतङ्गानां पावनः परिपालकः ॥ ३५ ॥

वृन्दावनविहारी च नित्यस्थलविहारकः ।
क्षेत्रपालो मानवश्च भुवनो भवपालकः ॥ ३६ ॥
सत्त्वं रजस्तमोबुद्धिरहङ्कारपरोऽपि च ।
आकाशंगः रविः सोमो धरित्रीधरणीधरः ॥ ३७ ॥
निश्चिन्तो योगनिद्रश्च कृपालुः देहधारकः । var शोकनिद्रश्च
सहस्रशीर्षा श्रीविष्णुर्नित्यो जिष्णुर्निरालयः ॥ ३८ ॥
कर्ता हर्ता च धाता च सत्यदीक्षादिपालकः । var शक्रदीक्षादि
कमलाक्षः स्वयम्भूतः कृष्णवर्णो वनप्रियः ॥ ३९ ॥
कल्पद्रुमः पादपारिः कल्पकारी स्वयं हरिः ।
देवानां च गुरुः सर्वदेवरूपो नमस्कृतः ॥ ४० ॥

निगमागमचारी च कृष्णगम्यः स्वयंयशः ।
नारायणो नराणां च लोकानां प्रभुरुत्तमः ॥ ४१ ॥
जीवानां परमात्मा च जगद्वन्द्यः परो यमः ।
भूतावासो परोक्षश्च सर्ववासी चराश्रयः ॥ ४२ ॥
भागीरथी मनोबुद्धिर्भवमृत्युः परिस्थितः ।
संसारप्रणयी प्रीतः संसाररक्षकः सदा ॥ ४३ ॥
नानावर्णधरो देवो नानापुष्पविभूषणः ।
नन्दध्वजो ब्रह्मरूपो गिरिवासी गणाधिपः ॥ ४४ ॥
मायाधरो वर्णधारी योगीशः श्रीधरो हरिः ।
महाज्योतिर्महावीर्यो बलवांश्च बलोद्भवः ॥ ४५ ॥ var बलोद्भवः

भूतकृत् भवनो देवो ब्रह्मचारी सुराधिपः ।
सरस्वती सुराचार्यः सुरदेवः सुरेश्वरः ॥ ४६॥
अष्टमूर्तिधरो रुद्र इच्छामूर्तिः पराक्रमः ।
महानागपतिश्चैव पुण्यकर्मा तपश्चरः ॥ ४७॥
दिनपो दीनपालश्च दिव्यसिंहो दिवाकरः ।
अनभोक्ता सभोक्ता च हविर्भोक्ता परोऽपरः ॥ ४८॥
मन्त्रदो ज्ञानदाता  च सर्वदाता परो  हरिः ।
परर्द्धिः परधर्मा च सर्वधर्मनमस्कृतः ॥ ४९॥
क्षमादश्च दयादश्च सत्यदः सत्यपालकः ।
कंसारिः केशिनाशी च नाशनो दुष्टनाशनः ॥ ५०॥

पाण्डवप्रीतिदश्चैव परमः परपालकः ।
जगद्धाता जगत्कर्ता गोपगोवत्सपालकः ॥ ५१॥
सनातनो महाब्रह्म फलदः कर्मचारिणाम् ।
परमः परमानन्दः परर्द्धिः परमेश्वरः ॥ ५२॥
शरणः सर्वलोकानां सर्वशास्त्रपरिग्रहः ।
धर्मकीर्तिर्महाधर्मो धर्मात्मा धर्मबान्धवः ॥ ५३॥
मनःकर्ता महाबुद्धिर्महामहिमदायकः ।
भूर्भुवः स्वो महामूर्तिः भीमो भीमपराक्रमः ॥ ५४॥
पथ्यभूतात्मको देवः पथ्यमूर्तिः परात्परः ।
विश्वाकारो विश्वगर्भः सुरामन्दो सुरेश्वरः ॥ ५५॥ var  सुरहा च
भुवनेशः सर्वव्यापी भवेशः भवपालकः ।
दर्शनीयश्चतुर्वेदः शुभाङ्गो लोकदर्शनः ॥ ५६॥
श्यामलः शान्तमूर्तिश्च सुशान्तश्चतुरोत्तमः ।
सामप्रीतिश्च ऋक् प्रीतिर्यजुषोऽथर्वणप्रियः ॥ ५७॥
श्यामचन्द्रश्चतुमूर्तिश्चतुर्बाहुश्चतुर्गतिः ।
महाज्योतिर्महामूर्तिर्महाधामा महेश्वरः ॥ ५८॥
अगस्तिर्वरदाता च सर्वदेवपितामहः ।
प्रह्लादस्य प्रीतिकरो ध्रुवाभिमानतारकः ॥ ५९॥
मण्डितः सुतनुर्दाता साधुभक्तिप्रदायकः ।
ॐकारश्च परंब्रह्म ॐ निरालंबनो हरिः ॥ ६०॥

सद्गतिः परमो हंसो जीवात्मा जननायकः ।
मनश्चिन्त्यश्चित्तहारी मनोज्ञश्चापधारकः ॥ ६१॥
ब्राह्मणो ब्रह्मजातीनामिन्द्रियाणां गतिः प्रभुः ।
त्रिपादादूद्ध्र्वसम्भूतो विराट् चैव सुरेश्वरः ॥ ६२॥ var  विराटश्च

परात्परः परः पादः पद्मस्थः कमलासनः ।
नानासन्देहविषयस्तत्त्वज्ञानाभिनिवृतः ॥ ६३॥
सर्वज्ञश्च जगद्बन्धुर्मनोजज्ञातकारकः ।
मुखसंभूतविप्रस्तु वाहसम्भूतराजकः ॥ ६४॥
ऊरोवैश्यः पदोभूतः शूद्रो नित्योपनित्यकः ।
ज्ञानी मानी वर्णदश्च सर्वदः सर्वभूषितः ॥ ६५॥

अनादिवर्णसन्देहो नानाकर्मोपरिस्थितः ।
शुद्धादिधर्मसन्देहो ब्रह्मदेहः स्मिताननः ॥ ६६॥
शंबरारिर्वेदपतिः सुकृतः सत्त्ववर्द्धनः ।
सकलं सर्वभूतानां सर्वदाता जगन्मयः ॥ ६७॥
सर्वभूतहितैषी च सर्वप्राणिहिते रतः ।
सर्वदा देहधारी च बटको बटुगः सदा ॥ ६८॥ var बटुको
सर्वकर्मविधाता च ज्ञानदः करुणात्मकः ।
पुण्यसम्पत्तिदाता च कर्ता हर्ता तथैव च ॥ ६९॥
सदा नीलाद्रिवासी च नतास्यश्च पुरन्दरः ।
नरो नारायणो देवो निर्मलो निरुपद्रवः ॥ ७०॥

ब्रह्माशम्भुः सुरश्रेष्ठः कम्बुपाणिर्बलोऽर्जुनः ।
जगद्धाता चिरायुश्च गोविन्दो गोपवल्लभः ॥ ७१॥
देवो देवो महाब्रह्म महाराजो महागतिः ।
अनन्तो भूतनाथश्च अनन्तभूतसम्भवः ॥ ७२॥
समुद्रपर्वतानां च गन्धर्वाणां तथाऽऽश्रयः ।
श्रीकृष्णो देवकीपुत्रो मुरारिर्वेणुहस्तकः ॥ ७३॥
जगत्स्थायी जगद्व्यापी सर्वसंसारभूतिदः ।
रत्नगर्भो रत्नहस्तो रत्नाकरसुतापतिः ॥ ७४॥
कन्दर्परक्षाकारी च कामदेवपितामहः ।
कोटिभास्करसंज्योतिः कोटिचन्द्रसुशीतलः ॥ ७५॥

कोटिकन्दर्पलावण्यः काममूर्तिर्बृहत्तपः ।
मथुरापुरवासी च द्वारिको द्वारिकापतिः ॥ ७६॥
वसन्तऋतुनाथश्च माधवः प्रीतिदः सदा ।
श्यामबन्धुर्घनश्यामो घनाघनसमद्युतिः ॥ ७७॥
अनन्तकल्पवासी च कल्पसाक्षी च कल्पकृत् । var अनन्तः कल्पवासी
सत्यनाथः सत्यचारी सत्यवादी सदास्थितः ॥ ७८॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्युगपतिर्भवः ।

रामकृष्णो युगान्तश्च बलभद्रो बलो बली ॥ ७९॥
लक्ष्मीनारयणो देवः शालग्रामशिलाप्रभुः ।
प्राणोऽपानः समानश्चोदानव्यानौ तथैव च ॥ ८०॥
पञ्चात्मा पञ्चतत्त्वं च शरणागतपालकः ।
यत्किंचित् दृश्यते लोके तत्सर्वं जगदीश्वरः ॥ ८१॥

जगदीशो महद्ब्रह्म जगन्नाथाय ते नमः ।
जगदीशो महद्ब्रह्म जगन्नाथाय ते नमः ।
जगदीशो महद्ब्रह्म जगन्नाथाय ते नमः ।

॥ इति श्रीजगन्नाथसहस्रनामस्तोत्रम् ॥

---

अथ श्रीजगन्नाथसहस्रनाम माहात्म्यम् ।

एवं नामसहस्रेण स्तवोऽयं पठ्यते यदि ।
पाठं पाठयते यस्तु शृणुयादपि मानवः ॥ १॥
सहस्राणां शतेनैव यज्ञेन परिपूज्यते ।
यत्पुण्यं सर्वतीर्थेषु वेदेषु च विशेषतः ॥ २॥
तत्पुण्यं कोटिगुणितं अचिराल्लभते नरः ।
जगन्नाथस्य नामानि पुण्यानि सफलानि च ॥ ३॥
विद्यार्थी लभते विद्यां योगार्थी योगमाप्नुयात् ।
कन्यार्थी लभते कन्यां जयार्थी लभते जयम् ॥ ४॥
कामार्थी लभते कामं पुत्रार्थी लभते सुतम् ।
क्षत्रियाणां प्रयोगेण संग्रामे जयदः सदा ॥ ५॥

वैश्यानां सर्वधर्मः स्याच्छूद्राणां सुखमेधते ।
साधूनां पठतो नित्यं ज्ञानदः फलदस्तथा ॥ ६॥
नाऽपवादं न दुःखं च कदा च लभते नरः ।
सर्वसौख्यं फलं प्राप्य चिरंजीवी भवेन्नरः ॥ ७॥
शृणु राजन् महाबाहो महिमानं जगत्पतेः ।
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ ८॥
जगन्नाथं लोकनाथं पठते यः सदा शुचिः ।
कलिकालोद्भवं पापं तत्क्षणात्तस्य नश्यति ॥ ९॥

इति श्रीब्रह्मपुराणे भीष्म-युधिष्ठिर-संवादे

